ततः—तं घोषमाकर्ण्य सर्वेश्वरेश्वरः पार्थसारथी रथी च पाण्डुतनयस्त्रैलोक्यविजयोपकरणभूते महति स्यन्दने स्थितौ त्रैलोक्यं कम्पयन्तौ श्रीमत्पाञ्चजन्यदेवदत्तौ दिव्यौ शङ्खौ प्रदध्मतुः ॥

ततो युधिष्ठिरो वृकोदरादयश्च स्वकीयान् शङ्खान् पृथक्पृथक् प्रदध्मुः। स घोषो दुर्योधनप्रमुखानां सर्वेषामेव भवत्पुत्राणां हृदयानि बिभेद। अद्यैव नष्टं कुरूणां बलमिति धार्तराष्ट्रा मेनिरे। एवं तद्विजयाभिकाङ्क्षिणे धृतराष्ट्राय सञ्जयोऽकथयत् ॥ ११—१९ ॥

तस्य संजनयन् इत्यादेः तुमुलोऽभवत् इत्यन्तस्यार्थमाह—**तस्येति**। जनयन्निति शतुः * लक्षणहेत्वोः क्रियायाः (अष्टा. ३. २. १२६) इति हेत्वर्थत्वसूचनाय **जनयितुम्** इत्युक्तम्। सिंहनादं विनद्येत्येतत्, ओदनपाकं पचतीतिवदिति सूचयितुं **कृत्वा** इति पदम्। कृभ्वस्तयः क्रियासामान्यवचना इत्येतद्व्यञ्जनायोदाहरणतया शङ्खध्मानं च **कृत्वा** इत्युक्तम्। ततः शङ्खाः इत्यत्र ततःशब्देन विजिगीषासूचनाय भीष्मेण सेनापतिना कारितत्वं ज्ञापितमित्यभिप्रायेणोक्तम् **अकारयदिति**। **शङ्खभेरीति** पणवाद्युपलक्षणम्। ततः श्लोकेऽपि कतिपयवाद्यविशेषनिर्देश उपलक्षणार्थ इति सूचितम्। सिंहनादशङ्खध्मानाभ्यां शङ्खभेर्यादिनादसमुच्चयार्थो द्वितीयश्चकारः। कृत्वेत्यनेन अकार-यदित्यस्य समुच्चयार्थस्तृतीयः ॥

* ततः श्वेतैरित्यादिकं * धनंजय इत्यन्तं व्याचष्टे—**ततस्तमिति**। तत इति व्याख्येयपदम्; **तं घोषमाकर्ण्ये**ति तद्विवक्षितकथनम्। **सर्वेश्वरेश्वरः पार्थसारथिरिति**। सर्वोत्कृष्टेभ्य उत्कृष्टः परमपुरुषो निकृष्टान्मानुषमात्रादपि निकृष्टतामाश्रितवात्सल्येन नीत इति भावः। पाण्डवविजयसूचनाय संजयेनोपात्तो माधवशब्दोऽत्र श्रियःपतित्ववाची सर्वेश्वरेश्वरत्वपर एव। *स्यन्दने स्थितौ इत्यविशेषेण स्थितिव्यवच्छेदाय सारथित्वरथित्वविभागः। *श्वेतैः इत्यादिना प्रतिपादितमहत्त्वव्यक्त्यर्थमुक्तं **त्रैलोक्येति**। नात्र परिमाणादिमहत्त्वमात्रं विवक्षितमिति भावः। **त्रैलोक्यं कम्पयन्ताविति**। तयोः स्यन्दने स्थितिमात्रमपि त्रैलोक्यकम्पनहेतुरिति भावः। यद्वा * दिव्यौ शङ्खौ प्रदध्मतुः इत्याद्युक्तप्रकृष्टाध्मानमूलकशङ्खघोषातिशयेन, * नभश्च पृथिवीं चैवेति वक्ष्यमाणेन च, फलितमिदम्। दिव्यत्वोक्तिदर्शितशङ्खातिशयवैशद्याय पाञ्चजन्यदेवदत्तसंज्ञोक्तिः। एवं भीमसेनादिशङ्खचतुष्टयविशेषे नामनिर्देशोऽपि। **पृथक् पृथक् प्रदध्मुरिति**—यथैकैकशङ्खध्वनिरेव धार्तराष्ट्रहृदयभेदाय स्यात्, तथा प्रदध्मुरिति भावः; यद्वा यथास्वं प्रहर्षद्योतनाय क्रमात्प्रदध्मुरिति। * स घोषः इति श्लोके नभश्च पृथिवीं चानुनादयन्नपि धार्तराष्ट्राणामेव हृदयानि बिभेदेत्यन्वयः; अन्येषां तु हर्षहेतुरभूदिति भावः। **सर्वेषामेव भवत्पुत्राणामि**त्यनेन तेषु दृढचित्तः कश्चिदपि नास्तीति द्योतनाय धार्तराष्ट्रशब्दतद्गतबहुवचनयोरर्थ उक्तः। व्यदारयत् इत्यस्य वक्ष्यमाणाभिप्रायद्योतकं प्रतिपदं **बिभेदे**ति। घोषस्य शस्त्रादिवत् हृदयविदारणत्वं कथमित्यत्राह—**अद्यैवेति**। स्वबलस्य विजयित्वमध्यवस्यतां तन्नाशबुद्धिरेव हि हृदयभेद इति भावः। धार्तराष्ट्रविजयबुभुत्सया पृच्छते धृतराष्ट्राय प्रागुक्तप्रकारेण तदपजयसूचकमेव सञ्जयोऽकथयदित्याह—**एवमिति** ॥

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः। प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २०**
**हृषीकेशं तदा वाक्यमिदमाह महीपते।**

**अर्जुन उवाच—**

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१**

यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् । कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२
यो त्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः । धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३

सञ्जय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत । सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४
भीष्मद्रोणप्रमुखतस्सर्वेषां च महीक्षिताम् । उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५

अथ युयुत्सूनवस्थितान्धार्तराष्ट्रान्दृष्ट्वा लङ्कादहनवानरध्वजः पाण्डुतनयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसङ्कल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावरनिखिलजनान्तरबाह्यकरणानां सर्वप्रकारनियमनेऽवस्थितमाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं युयुत्सून्यथावदवेक्षितुं तदीक्षणक्षमे स्थाने रथं स्थापयेत्यचोदयत् ॥ स च तेन चोदितस्तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव महीक्षितां पश्यतां यथाचोदितमकरोत् । ईदृशी भवदीयानां विजयस्थितिरिति चावोचत् ॥ २०—२५ ॥

*अथ व्यवस्थितान् इत्यादेः *कुरून् इत्यन्तस्यार्थमाह—**अथेत्यादिना इति चावोचदित्यन्तेन** । तत्र वाक्यत्रये प्रथमेन वाक्येन प्रियचिकीर्षवः इत्यन्तस्यार्थ उच्यते । व्यवस्थितान् इत्यत्र विशब्दसूचितविशेषव्यक्तये **युयुत्सून्** इत्युक्तम्; *योद्धुकामानवस्थितान् इति ह्यनन्तरमप्युच्यते । कपिध्वजः इत्यत्र कपित्वमात्रप्रतिपन्नलाघवं निवारयितुं सौगन्धिकयात्रायां हनुमद्दत्तं वरम्, स्वरूपसंदर्शनमात्रेण रक्षसामिव परेषां संक्षोभं च सूचयितुं **लङ्कादहनवानरध्वजः** इत्युक्तम् । अप्रच्युतस्वभावत्वप्रतिपादकाच्युतपदाभिप्रेतव्यञ्जनाय **ज्ञाने**त्यादिकम् । हृषीकेशपदव्याख्या **परावरे**त्यादि । यद्वा सृष्ट्यादिकं वीर्यादिकं तदुपलक्षि[त]तं ज्ञानादिकमपि हृषीकेशशब्दार्थ एव । यथोक्त**महिर्बुध्न्यसंहितायाम्**—*क्रीडया हृष्यति व्यक्तमीशः सन् सृष्टिरूपया । हृषीकेशत्वमीश[स्य]त्वं देवत्वं चास्य तत्स्फुटम् ॥ अविकारितया जुष्टो हृषीको वीर्यरूपया । ईशः स्वातन्त्र्ययोगेन नित्यं सृष्ट्यादिकर्मणि ॥ ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते ॥ (५३. ४४. ४५. ५६) इति । आश्रितान् न च्यावयति, अतश्च्युतोऽस्य नास्तीत्यच्युतशब्दस्य काचिन्निरुक्तिः । तां दर्शयति—**आश्रितवात्सल्ये**त्यादिना । **स्वसारथ्येऽवस्थित**मिति । हृषीकेशतया सर्वेषां करणानां सर्वप्रकारनियमनेऽवस्थितस्य रथयुग्यमात्रनियमनं कियदिति भावः । निरीक्षे इत्यत्रोपसर्गार्थः **यथावत्** इति दर्शितः । **यावच्छब्दो**ऽत्र साकल्यवाची, निरीक्षणकालावधिवाची वा, *यावत्पुरानिपातयोर्लट् (अष्टा. ३. ३. ४) इति निरीक्षणस्य भविष्यत्त्वद्योतको वा । यैः सह मया योद्धव्यं तान्निरीक्षे इत्यत्र, मया सह यैर्योद्धव्यं तानवेक्ष इति नोक्तम्; अतः * योत्स्यमानानिति श्लोकस्योत्थानम् । * धार्तराष्ट्रस्य दुर्बुद्धेः इति दुर्योधनादिदोषप्रख्यापनतात्पर्याच्च न पौनरुक्त्यम् । यद्वा सेनयोरुभयोर्मध्ये इति पूर्वोक्तत्वात्, सेनयोरुभयोरपि स्थितानपश्यदिति वक्ष्यमाणत्वाच्च, स्वसेनास्थितस्वसहायविषयः पूर्वश्लोकः; तत्र कैर्मया सह स्थित्वा परैर्योद्धव्यमित्यर्थः । उत्तरस्तु श्लोकः प्रतिसैन्यस्थितधार्तराष्ट्रसहायविषय इति व्यक्त एव । प्रागेव तेषां विदितत्वेऽपि इदानीन्तनसंरम्भादिविशेषदर्शनेन तत्तदुचितसाम्परायिकव्यापारसौकर्याय यथावद्दर्शनमिहार्जुनेनाकाङ्क्षितम् । सेनयोरुभयोर्मध्ये इत्यस्याभिप्रेतकथनं **तदीक्षणक्षमे स्थाने** इति । **अचोदयत्** इत्यनेन स्थापय इत्यत्र प्रत्ययस्य नियोगार्थत्वं दर्शितम् । सर्वप्रशासिता नियोज्योऽभवदित्याश्चर्यमिति भावः ॥

ततः—तं घोषमाकर्ण्य सर्वेश्वरेश्वरः पार्थसारथी रथी च पाण्डुतनयस्त्रैलोक्यविजयोपकरणभूते महति स्यन्दने स्थितौ त्रैलोक्यं कम्पयन्तौ श्रीमत्पाञ्चजन्यदेवदत्तौ दिव्यौ शङ्खौ प्रदध्मतुः ॥

ततो युधिष्ठिरो वृकोदरादयश्च स्वकीयान् शङ्खान् पृथक्पृथक् प्रदध्मुः। स घोषो दुर्योधनप्रमुखानां सर्वेषामेव भवत्पुत्राणां हृदयानि बिभेद। अद्यैव नष्टं कुरूणां बलमिति धार्तराष्ट्रा मेनिरे। एवं तद्विजयाभिकाङ्क्षिणे धृतराष्ट्राय सञ्जयोऽकथयत् ॥ ११—१९ ॥

तस्य संजनयन् इत्यादेः तुमुलोऽभवत् इत्यन्तस्यार्थमाह—तस्येति। जनयन्निति शतुः * लक्षणहेत्वोः क्रियायाः (अष्टा. ३. २. १२६) इति हेत्वर्थत्वसूचनाय जनयितुम् इत्युक्तम्। सिंहनादं विनद्येत्येतत्, ओदनपाकं पचतीतिवदिति सूचयितुं कृत्वा इति पदम्। कृभ्वस्तयः क्रियासामान्यवचना इत्येतद्व्यञ्जनायोदाहरणतया शङ्खध्मानं च कृत्वा इत्युक्तम्। ततः शङ्खाः इत्यत्र ततःशब्देन विजिगीषासूचनाय भीष्मेण सेनापतिना कारितत्वं ज्ञापितमित्यभिप्रायेणोक्तम् अकारयदिति। शङ्खभेरीति पणवाद्युपलक्षणम्। ततः श्लोकेऽपि कतिपयवाद्यविशेषनिर्देश उपलक्षणार्थं इति सूचितम्। सिंहनादशङ्खध्मानाभ्यां शङ्खभेर्यादिनादसमुच्चयार्थो द्वितीयश्चकारः। कृत्वेत्यनेन अकारयदित्यस्य समुच्चयार्थस्तृतीयः ॥

* ततः श्वेतैरित्यादिकं * धनंजय इत्यन्तं व्याचष्टे—ततस्तमिति। तत इति व्याख्येयपदम्; तं घोषमाकर्ण्येति तद्विवक्षितकथनम्। सर्वेश्वरेश्वरः पार्थसारथिरिति। सर्वोत्कृष्टेभ्य उत्कृष्टः परमपुरुषो निकृष्टान्मानुषमात्रादपि निकृष्टतामाश्रितवात्सल्येन नीत इति भावः। पाण्डवविजयसूचनाय संजयेनोपात्तो माधवशब्दोऽत्र श्रियःपतित्ववाची सर्वेश्वरेश्वरत्वपर एव। *स्यन्दने स्थितौ इत्यविशेषेण स्थितिव्यवच्छेदाय सारथित्वरथित्वविभागः। *श्वेतैः इत्यादिना प्रतिपादितमहत्त्वव्यक्त्यर्थमुक्तं त्रैलोक्येति। नात्र परिमाणादिमहत्त्वमात्रं विवक्षितमिति भावः। त्रैलोक्यं कम्पयन्ताविति। तयोः स्यन्दने स्थितिमात्रमपि त्रैलोक्यकम्पनहेतुरिति भावः। यद्वा * दिव्यौ शङ्खौ प्रदध्मतुः इत्याद्युक्तप्रकृष्टाध्मानमूलकशङ्खघोषातिशयेन, * नभश्च पृथिवीं चैवेति वक्ष्यमाणेन च, फलितमिदम्। दिव्यत्वोक्तिदर्शितशङ्खातिशयवैशद्याय पाञ्चजन्यदेवदत्तसंज्ञोक्तिः। एवं भीमसेनादिशङ्खचतुष्टयविशेषे नामनिर्देशोऽपि। पृथक् पृथक् प्रदध्मुरिति—यथैकैकशङ्खध्वनिरेव धार्तराष्ट्रहृदयभेदाय स्यात्, तथा प्रदध्मुरिति भावः; यद्वा यथास्वं प्रहर्षद्योतनाय क्रमात्प्रदध्मुरिति। * स घोषः इति श्लोके नभश्च पृथिवीं चानुनादयन्नपि धार्तराष्ट्राणामेव हृदयानि बिभेदेत्यन्वयः; अन्येषां तु हर्षहेतुरभूदिति भावः। सर्वेषामेव भवत्पुत्राणामित्यनेन तेषु दृढचित्तः कश्चिदपि नास्तीति द्योतनाय धार्तराष्ट्रशब्दतद्गतबहुवचनयोरर्थ उक्तः। व्यदारयत् इत्यस्य वक्ष्यमाणाभिप्रायद्योतकं प्रतिपदं बिभेदेति। घोषस्य शस्त्रादिवत् हृदयविदारणत्वं कथमित्यत्राह—अद्यैवेति। स्वबलस्य विजयित्वमध्यवस्यतां तन्नाशबुद्धिरेव हि हृदयभेद इति भावः। धार्तराष्ट्रविजयबुभुत्सया पृच्छते धृतराष्ट्राय प्रागुक्तप्रकारेण तदपजयसूचकमेव सञ्जयोऽकथयदित्याह—एवमिति ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः। प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २०
हृषीकेशं तदा वाक्यमिदमाह महीपते।

उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥

यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् । कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः । धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३

सञ्जय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत । सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४
भीष्मद्रोणप्रमुखतस्सर्वेषां च महीक्षिताम् । उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५

अथ युयुत्सूनवस्थितान्धार्तराष्ट्रान्दृष्ट्वा लङ्कादहनवानरध्वजः पाण्डुतनयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसङ्कल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावरनिखिलजनान्तरबाह्यकरणानां सर्वप्रकारनियमनेऽवस्थितमाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं युयुत्सून्यथावदवेक्षितुं तदीक्षणक्षमे स्थाने रथं स्थापयेत्यचोदयत् ॥ स च तेन चोदितस्तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव महीक्षितां पश्यतां यथाचोदितमकरोत् । ईदृशी भवदीयानां विजयस्थितिरिति चावोचत् ॥ २०—२५ ॥

*अथ व्यवस्थितान् इत्यादेः *कुरून् इत्यन्तस्यार्थमाह—**अथेत्यादिना इति चावोचदित्यन्तेन** । तत्र वाक्यत्रये प्रथमेन वाक्येन प्रियचिकीर्षवः इत्यन्तस्यार्थ उच्यते । व्यवस्थितान् इत्यत्र विशब्दसूचितविशेषव्यक्तये **युयुत्सून्** इत्युक्तम्; *योद्धुकामानवस्थितान् इति ह्यनन्तरमप्युच्यते । कपिध्वजः इत्यत्र कपित्वमात्रप्रतिपन्नलाघवं निवारयितुं सौगन्धिकयात्रायां हनुमद्दत्तं वरम्, स्वरूपसंदर्शनमात्रेण रक्षसामिव परेषां संक्षोभं च सूचयितुं **लङ्कादहनवानरध्वजः** इत्युक्तम् । अप्रच्युतस्वभावत्वप्रतिपादकाच्युतपदाभिप्रेतव्यञ्जनाय **ज्ञाने**त्यादिकम् । हृषीकेशपदव्याख्या **परावरे**त्यादि । यद्वा सृष्ट्यादिकं वीर्यादिकं तदुपलक्षि[त]तं ज्ञानादिकमपि हृषीकेशशब्दार्थ एव । यथोक्त**महिर्बुध्न्यसंहितायाम्**—*क्रीडया हृष्यति व्यक्तमीशः सन् सृष्टिरूपया । हृषीकेशत्वमीश[स्य]त्वं देवत्वं चास्य तत्स्फुटम् ॥ अविकारितया जुष्टो हृषीको वीर्यरूपया । ईशः स्वातन्त्र्ययोगेन नित्यं सृष्ट्यादिकर्मणि ॥ ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते ॥ (५३. ४४. ४५. ५६) इति । आश्रितान् न च्यावयति, अतश्च्युतोऽस्य नास्तीत्यच्युतशब्दस्य काचिन्निरुक्तिः । तां दर्शयति—**आश्रितवात्सल्ये**त्यादिना । **स्वसारथ्येऽवस्थित**मिति । हृषीकेशतया सर्वेषां करणानां सर्वप्रकारनियमनेऽवस्थितस्य रथयुग्यमात्रनियमनं कियदिति भावः । निरीक्षे इत्यत्रोपसर्गार्थः **यथावत्** इति दर्शितः । **यावच्छब्दो**ऽत्र साकल्यवाची, निरीक्षणकालावधिवाची वा, *यावत्पुरानिपातयोर्लट् (अष्टा. ३. ३. ४) इति निरीक्षणस्य भविष्यत्त्वद्योतको वा । यैः सह मया योद्धव्यं तान्निरीक्षे इत्यत्र, मया सह यैर्योद्धव्यं तानवेक्ष इति नोक्तम्; अतः *योत्स्यमानानिति श्लोकस्योत्थानम् । *धार्तराष्ट्रस्य दुर्बुद्धेः इति दुर्योधनादिदोषप्रख्यापनतात्पर्याच्च न पौनरुक्त्यम् । यद्वा सेनयोरुभयोर्मध्ये इति पूर्वोक्तत्वात्, सेनयोरुभयोरपि स्थितानपश्यदिति वक्ष्यमाणत्वाच्च, स्वसेनास्थितस्वसहायविषयः पूर्वश्लोकः; तत्र कैर्मया सह स्थित्वा परैर्योद्धव्यमित्यर्थः । उत्तरस्तु श्लोकः प्रतिसैन्यस्थितधार्तराष्ट्रसहायविषय इति व्यक्त एव । प्रागेव तेषां विदितत्वेऽपि इदानीन्तनसंरम्भादिविशेषदर्शनेन तत्तदुचितसाम्परायिकव्यापारसौकर्याय यथावद्दर्शनमिहार्जुनेनाकाङ्क्षितम् । सेनयोरुभयोर्मध्ये इत्यस्याभिप्रेतकथनं **तदीक्षणक्षमे स्थाने** इति । **अचोदयत्** इत्यनेन स्थापय इत्यत्र प्रत्ययस्य नियोगार्थत्वं दर्शितम् । सर्वप्रशासिता नियोज्योऽभवदित्याश्चर्यमिति भावः ॥

*एवमुक्तः इत्यादेः *महीक्षिताम् इत्यन्तस्यार्थमाह—**स चेति** । अर्जुनवचनरथस्थापनयोर्व्यवधायकाभावफलितमुक्तं **तत्क्षणादेवेति** । भीष्मद्रोणप्रमुखतः इत्यत्र प्रमुखशब्दः आदिशब्दसमानार्थः; तद्धतस्तसिप्रत्ययश्च सार्वविभक्तिकत्वात् षष्ठीबहुवचनार्थे इत्यभिप्रायेणोक्तं **भीष्मद्रोणादीना**मिति । तदा चकारोऽवधारणार्थ इति दर्शयितुं **सर्वेषामेवे**त्युक्तम् । अनादरे षष्ठीति व्यञ्जनाय **पश्यता**मिति पदाध्याहारः; यद्वा प्रमुखतः—अग्रत इत्यर्थः । तदेव महीक्षिताम् इत्यत्रापि बुद्ध्या निष्कृष्य योजनीयम् । तदा चकारः समुच्चयार्थः । भाष्ये त्वेवकारोऽपि तदर्थ एव; पश्यतामिति फलितार्थोक्तिः । उवाच पार्थ इत्यस्य तात्पर्यमाह—**ईदृशीति** । एतान्समवेतान् इति जेतव्यसमुदायप्रदर्शनेन विजयस्थितिरभिप्रेतेति भावः । [यद्वा] धार्तराष्ट्रकर्मकविजयस्थितिरित्यर्थः । अथवा धार्तराष्ट्रकर्तृकविजयस्थितिरित्थमित्युपालम्भगर्भमवोचदित्यर्थः । धृतराष्ट्रं प्रति सञ्जयवाक्याभिप्रायेण **भवदीयानाम्** इत्युक्तम् । अयमेवार्थ उचितः, अर्जुनं प्रति कृष्णेन भवतामित्येतावन्मात्रस्य वक्तव्यत्वात्; धृतराष्ट्रं प्रति तु भवत्पुत्राणाम् इति पूर्वोक्तवत् भवदीयान्विलोक्य इति वक्ष्यमाणवच्चात्रापि भवदीयनिर्देशोपपत्तेः । *किमकुर्वतेति गूढाभिसन्धेः पृच्छतो धृतराष्ट्रस्य गूढाभिसन्धिः सञ्जयो धार्तराष्ट्रहृदयविदारणादिकमेवमकथयत् ॥ २०—२५ ॥

**तत्रापश्यत्स्थितान् पार्थः पितॄनथ पितामहान् । आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६**
**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि । तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥ २७**
**कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।**

अर्जुन उवाच—

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति । वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९**
**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते । न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३०**
**निमित्तानि च पश्यामि विपरीतानि केशव । न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१**
**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च । किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च । त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥**
आचार्याः पितरः पुत्रास्तथैव च पितामहाः । मातुलाश्श्वशुराः पौत्राः स्यालास्संबन्धिनस्तथा ॥ ३४
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन । अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन । पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान् । स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः । कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् । कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः । धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४०
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१
सङ्करो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२

एवमुपकारकान् प्रणम्य साक्षात् परम्परया च सर्वोपकारकस्य भगवतः सत्संप्रदायप्रदानमहोपकारकृतज्ञतया आचार्यप्रियचिकीर्षया च प्रेरितस्तत्प्रसादसन्धुक्षिततत्प्रबन्धानुसन्धानजनितज्ञानभक्तिपरिवाहरूपे स्तोत्रे प्राप्यप्रापकरूप-प्रतिपाद्यसंग्रहपूर्वकं प्रवर्तते—**यन्मूर्ध्नी**ति ॥ यच्छब्देन सर्वशास्त्रप्रसिद्धं सर्वोत्तरत्वं सूच्यते । मूर्ध्नि मे भातीत्याश्चर्य-गर्भम् । अत्यन्तनिकृष्टस्य मे मूर्ध्नि पङ्गोरुपरि गङ्गानिपातवदयत्नोपस्थितमनुभवयोग्यं भवतीत्याश्रयणसौकर्यानुगुणसौल-भ्यसौशील्यवात्सल्यादिसूचकं च । **श्रुतिशिरस्सु च भाती**ति सर्वाधिकत्वसर्वरक्षकत्वहेयप्रतिभटत्वसमस्तमङ्गलगुणा-स्पदत्वपरमप्राप्यत्वादिविशिष्टतया सर्वेषु वेदान्तेषु प्रकाशत इति भावः । प्राप्तेराश्रयणपूर्वकतया तदुपयुक्तसौलभ्यप्राधा-न्यविवक्षया स्वमूर्ध्नि भानस्य प्रथमोपादानम् । नीचोत्तमस्थानवृत्तिभ्यां भाविकस्य तदौज्ज्वल्यस्य न ह्रान्युपचयौ, न च मे तत्र तदभिव्यक्तितारतम्यमित्यभिप्रायवान् चकारः । श्रूयते नित्यमित्यपौरुषेयत्वं दर्शयता श्रुतिशब्देन स्तुत्यविषयस्य प्रमाणस्य नित्यनिर्दोषत्वं सूच्यते । शिरश्शब्देनाव्यवहितप्रवृत्तानन्यपरभागोक्तिः । बहुवचनेन समन्वयाध्यायस्थापितं सर्वोपनिषदेककण्ठ्यमभिप्रेतम् । विप्रकीर्णेषु बहुषु वेदान्तेषु क्रमादनेकविधपूर्वपक्षगर्तनिस्तारेण कथंचिद्द्रष्टव्यम् ममे-दानीं सदाचार्यप्रसादादेकत्र झटित्ययत्नदृश्यमासीदिति कार्तार्थ्यं च व्यज्यते । **भाती**ति वर्तमानव्यपदेशेनाविरोधलक्ष-णोक्तं नित्यनिर्बाधत्वमपि प्रकाश्यते । **यस्मिन्**—स्वप्राप्त्युपायतया स्वीकृते । **अस्म**दित्यादिना सर्वप्रकारनिरवधिकभो-ग्यत्वोक्तिः । अस्मच्छब्द इहानुबन्धिसहितस्वात्मपरः । परावरपुरुषार्थविवेचकस्ववंशस्वभावोऽयमिति भावः । **मनोरथ-पथः**—इच्छामार्गः । आफलप्राप्तेरनुस्यूतोऽभिलाष इत्यर्थः । **सकलः**—ऐहिकामुष्मिकप्राप्यप्रापकस्वरूपसर्वविषयः । **समेति**—सम्यक् संभूय वा गच्छति, न तु विषयभेदात् बहुशिरस्क इति भावः । *या प्रीतिरविवेकानामित्या-दिवत् । *त्वमेव माता चेत्यारभ्य *त्वमेव सर्वं मम देवदेवे ति ह्यनुसन्धीयते । *पिता त्वं माता त्वमित्यादि च वक्ष्यति । *स्वाध्यायेनार्चयन्त्येके भवन्तं संयमेन च, *इति वाग्भिः प्रशस्ताभिरयोनिर्विष्णुरीडितः, *वाग्य-ज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः, *आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् । तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः, *एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा, *आदरेण यथा स्तौति धनवन्तं धनेच्छया । एवं चेद्विश्वकर्तारं को न मुच्येत बन्धनात्, *सा जिह्वा या हरिं स्तौतीत्यादिषु प्रसिद्धां स्वशक्यां वाचिकीं परिचर्यां करिष्यामीत्याह—**स्तोष्यामी**ति । परमार्थगुणवर्णनेन सेविष्य इति भावः । तथा च **द्रमिडभाष्यं** *नासता स्तुतिरुपपद्यत इति । आहुश्च **वरदाचार्याः** *कथमसता गुणेन कथितेन नुतिर्भवतीति । मुख्य-वृत्त्योपचारवृत्त्या वा कस्यचिद्गुणस्यानभिधाने स्तुतित्वं न स्यादिति भावः । गुण्यवच्छिन्नगुणाभिधानं हि स्तोत्रमाहुर्नीति-विदः । *सर्वेश्वरेश्वरः कृष्णः प्रोच्यते यदि पण्डितैः । तथाऽपि स्वल्पमेवोक्तं भूतार्थे कतमा स्तुतिरित्यादिकं तु गुणारोपणेन वचनं स्तुतिरिति लोकदृष्टप्रकारेणोच्यते । स्तोष्यामीत्यत्र प्रधानभूतस्तुतिफलं सर्वशेषिभूतस्तुत्यगामीति हृद-यम् । **नः**—पूर्वोक्तविद्यासन्तानजातानाम् । यद्वा सर्वदेशकालवर्तिनां सात्त्विकानाम् । **कुलधनम्**—आपदर्थं संग्राह्यमयत्न-लब्धमनुकूलोपायमित्यर्थः । **कुलदैवतम्**—अनतिलङ्घनीयमाराध्यमुपायनिर्वर्तकं फलप्रदं फलं च । **तत्**—उक्तप्रकारपरत्व-सौलभ्यपरमावधिभूतम् । पादस्यारविन्दत्वरूपणेन लक्ष्मीकरग्रहणयोग्यत्वकान्तिसौरभ्यसौकुमार्यादिकं व्यज्यते । *पुरुषे पुष्करेक्षणे, *जितं ते पुण्डरीकाक्ष, *यश्च देवो मया दृष्टः पुरा पद्मायतेक्षणः, *मत्स्यः कमललोचनः, *महावराह-स्स्फुटपद्मलोचनः, *रामो राजीवलोचन इत्यादिषु प्रसिद्धमनुग्रहशीलत्वपूर्णत्वव्यञ्जकमाह—**अरविन्दविलोचनस्येति** ।

अरविन्दवत् सौम्यं विलोचनं यस्य स तथोक्तः। मम योगिनां महति कुले जन्म सदाचार्यस्वीकरणमुपकारकेषु प्रावण्यं तदभिमतचिकीर्षया *वीचीतरङ्गवृत्तिक्रमेण प्रारिप्सितपरमात्मस्तुतौ सङ्कल्पश्च भगवत्कटाक्षविशेषस्य फलमिति भावः। उक्तं च मोक्षधर्मे *जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स तु विज्ञेयः स वै मोक्षार्थचिन्तक इति। तदन्यदृष्टिगोचरत्वे च दोष उक्तः *पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चास्य मानसं समभिप्लुतमिति। किञ्च स्वप्रेरिते मयि तुष्टूषमाणे तज्जनितप्रीत्यतिशयेन शेषपूरणं कर्तुमरविन्दवच्छैत्यविकासशोभादिमता लोचनेन भूयोऽपि मां कटाक्षयत इति धन्यतामात्मनोऽनुसन्धत्ते। उक्तं हि **श्रीविष्णुधर्मोत्तरे** रुद्रगीतायां *नाधन्यः केशवं स्तौति नाधन्योऽर्चयति प्रभुम्। नमत्यधन्यो न हरिं नाधन्यो वेत्ति माधवमिति ॥ ६ ॥

**तत्त्वेन यस्य महिमार्णवशीकराणुश्शक्यो न मातुमपि शर्वपितामहाद्यैः।**
**कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय ॥** ७

अथ स्तोत्राभ्युपगमप्रीतेन तच्छ्रवणकौतुकिना भगवता स्तुतिसाद्गुण्याय स्तोतव्यस्य स्वस्य स्वरूपरूपगुणविभूतिषु कार्त्स्न्येन प्रकाशितासु सर्वैरपि विषयानुरूपस्तुतेरशक्यतां बुद्ध्वा निवृत्तोद्योगः तत्प्रवृत्तमात्मानमुपालभते—**तत्त्वेने**ति ॥ यथावत् स्थिताकारेणेत्यर्थः, कार्त्स्न्येनेति वाऽभिप्रायः। **यस्य**—त्रिविधपरिच्छेदरहिततया निरवधिकगुणविभूतित्वेन श्रुत्यादिप्रसिद्धस्य। **महिमा**—अत्र निरुपाधिकसार्वज्ञ्यसर्वनियमनशक्त्यादिरूपः। तस्य दुरवगाहत्वादिनाऽर्णवत्वोक्तिः। तादृशस्य महिम्नोऽतिक्षुद्रविषयाधिष्ठानांशश्शीकराणुत्वेन कल्प्यते। अनन्तेषु गुणेष्वेकैकमात्रं वा। **शक्यो न मातुं**—वाचा मनसा च परिच्छेत्तुमशक्य इत्यर्थः। श्रूयते हि—*यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, *यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्, *त्वमेव त्वां वेत्थ योऽसि सोऽसि, *यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेदेति। एवं विभूतिद्वयैकदेशोऽपि मातुं न शक्य इत्यवगन्तव्यम्। ननु *ईशानस्सर्वविद्यानाम्, *ईश्वराज्ज्ञानमन्विच्छेत् इत्यादिप्रसिद्धवैभवस्सर्वज्ञनामा च शर्वः, तस्याप्युपदेष्टा सर्ववेदप्रवर्तनाधिकृतश्च पितामहः, सनन्दनादयोऽपि ब्रह्मभावनान्विता इत्युच्यन्ते; वेदाश्च स्वयं सर्वोपदेष्टारः; तत्कथमेतैर्मातुमशक्यत्वमित्यत्राह—**अपि शर्वपितामहाद्यैरि**ति। लोकोत्तरज्ञानैरपीत्यपिशब्दाभिप्रायः। अत्र कालत्रयवर्तिभिरपीति भाव्यम्; तथा चामनन्ति **बह्वृचाः**—*न ते विष्णो! जायमानो न जातो देव! महिम्नः परमन्तमापेति। उक्तं **चोत्तररामायणे ब्रह्मणा**—*त्वं हि लोकगतिर्देव! न त्वां केचन जानते। ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहामिति। **मोक्षधर्मे** च भृगुभरद्वाजसंवादे—*प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै। तौ च मां न विजानीतो मम मायाप्रमोहिताविति। ब्रह्मरुद्रसंवादे च—*न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम!। सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचिदिति। **श्रीविष्णुधर्मे** *न यस्य रूपं न बलप्रभावौ न च स्वभावः परमस्य पुंसः। विज्ञायते शर्वपितामहाद्यैस्तं वासुदेवं प्रणमाम्यचिन्त्यमिति। **वैष्णवे** च पुराणे—*यन्नायं भगवान् ब्रह्मा जानाति परमं पदम्। तन्नतास्स्म जगद्धाम तव सर्वगताच्युत! ॥ यं न देवा न मुनयो न चाहं न च शङ्करः। जानन्ति परमेशस्य तद्विष्णोः परमं पदमिति। **श्रीवाराहे** स्वयं चाह—*यदेतत्परमं ब्रह्म वेदवादेषु पठ्यते। स देवः पुण्डरीकाक्षः स्वयं नारायणः परः ॥ अद्यापि मां न जानन्ति रुद्रेन्द्रास्सपितामहा इति। **भगवद्गीतासु** च *नाहं प्रकाशस्सर्वस्य योगमायासमावृतः। मूढोऽयं नाभिजानाति लोको मामज-

मव्ययमिति । *मां तु वेद न कश्चनेति च । अत्र महिमार्णवशीकराणुर्मातुं न शक्यत इत्युक्त्वा महिमस्तुतिमिति-वचनात् स्वस्य चापलभूम्ना कार्त्स्न्येन महिमस्तुतावुद्योगस्सूच्यते । **तदीयमहिमस्तुतिं**—तदसाधारणस्य महिम्नः प्रकर्ष-कथनमित्यर्थः । तदीयस्य स्तोतव्यतया प्रस्तुतस्य पादारविन्दस्य माहात्म्यवर्णनमिति वा । **उद्यताय**—उद्युक्ताय । **मह्यं**—महायोगिभिस्सर्वैरप्यशक्ये प्रवृत्ताय स्वस्मै । **नम** इति पूजालिङ्गमेवात्र छेकोक्त्या निन्दार्थम् । साहसिकाः प्रायो नन्तव्या इति चोपालम्भः । नमोऽस्त्विति सामान्योक्त्या सर्वैः क्रियमाणं नमो मह्यमेवास्तु किमन्येन *नन्तव्यः परम-श्शेषीत्युक्तेन सर्वेश्वरेणेति व्यज्यते । **कवये**—क्रान्तदर्शिने, अपरिच्छेद्येऽपि परिच्छेदं पश्यते, अंशतोऽपि स्तोतुमशक्ये सर्वप्रकारवर्णनकौतुकिने सर्वेषां विडम्बनरसावहायेति भावः । अनन्ते भगवति स्ववाचा परिमितत्वावद्यमुद्धाटयन्नहं सर्वै-रात्मनः परिहसनीयतां न जानामी त्यभिप्रायेणाह—**निरपत्रपायेति** ॥ ७ ॥

**यद्वा श्रमावधि यथामति वाऽप्यशक्तस्स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।**
**वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः को मज्जतोरणुकुलाचलयोर्विशेषः ॥ ८**

अथ पार्थनयाह्वयः प्रभुणा प्रतिबोधितः । प्रारिप्सितपरित्यागान्निवृत्तः स्तोतुमीहते ॥

अत्र हि भगवता गुणोत्तरेषु गुरुष्वेव विश्रमे कथंचिन्निवारितेऽपि विषयानुरूपस्तोत्राशक्तिजनितं वैमुख्यं परि-हर्तुं वेदप्रभृतीनामपि वृत्तान्तमात्मनश्च दीनानुकम्पित्वादिगुणगणं प्रकाश्य प्रतिसमाहितः स्तोत्रे *यावानर्थ इति न्याया-त्स्वस्योचितप्रवृत्तितया स्वोपालम्भनिवृत्तिं सिद्धान्तयति—**यद्वेति** ॥ अशक्तोऽपि स्तौमीत्यन्वयः । अज्ञत्वमप्यत्रान्तर्नीतम् । यथावद्वक्तुं ज्ञातुं चाशक्त इति चोपस्कार्यम्, श्रमावधि यथामतीत्युभयोपादानात् । श्रमोक्तिरसामर्थ्यसूचनार्था, तेन चानुकम्पनीयोऽहमिति व्यज्यते । यथाऽऽह कालियः—*सोऽहं ते देवदेवेश ! नार्चनादौ स्तुतौ न च । सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद म इति । यथामतीति मतिक्षयसूचनाय । यथोच्यते—*इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयादिति । यथामतिवचनं च महाभारते प्रोक्तम्—*यथाज्ञानं तु वक्ष्यामि पुरुषं तं सनातनम् । तस्यैकस्य महत्त्वं हि स चैकः पुरुषस्स्मृतः ॥ महापुरुषशब्दं स बिभर्त्येकस्सनातन इति । वाशब्दः प्रति-पन्ने स्तुतिशक्तिक्षयात् स्तुतिशक्तावपि स्तोतव्यविषयज्ञानमान्द्याद्वा निवृत्तिसंभवं व्यनक्ति । अत्र स्तौमीति वर्तमाननिर्देशः स्तुतेर्वर्तमानसामीप्यपरः । अस्यापि वाक्यस्य स्तुत्यात्मकत्वं वा सूचयति । **एवमेव**—श्रमावधीत्याद्युक्तप्रकारेणेत्यर्थः । एवकारेण निश्शेषस्तुतेरसंभवस्स्थिरीक्रियते । अन्यथा परमात्मनः स्तुतिरेव न स्यात्, ततस्तद्विधानम्, *स्तव्यः स्तव-प्रियः स्तोत्रं स्तुतिरिति तन्नामानि च निरर्थकानि भवेयुरिति भावः । खलुशब्दः श्रुत्यादिप्रसिद्धिं द्योतयति । **तेऽपि**—लोकोत्तरज्ञानशक्तिमन्तोऽपीत्यर्थः । **सदा स्तुवन्तः**—स्वरूपनित्यतया वेदानां सदा स्तोतृत्वं युक्तम्, तथा *तद्विप्रासो विपन्यव इत्याद्याम्नातानां नित्यसूरीणां च स्यात्, चतुर्मुखादीनां तु प्रवाहनित्यतया यावदधिकारं यथाकालमविच्छिन्नं स्तोतृत्वम् । एवं सर्वेषु कल्पेष्विति विवक्षितम् । वेदशब्देनासदाद्यतीन्द्रियपुरुषार्थतदुपायवेदकत्वं व्यज्यते । **चतुर्मुख-मुखाः**—चतुर्मुखप्रधाना विबुधश्रेष्ठाः । स्वमुखैः वेदचतुष्टयप्रवर्तकत्वख्यापनाय चतुर्मुखशब्दः । सर्वैरपि यथावत् स्तोतु-मशक्यत्वं च भारतोक्तं—*वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वदेवैः । महात्मनश्शङ्खचक्रासिपाणेर्जिष्णो-र्विष्णोर्वसुदेवात्मजस्येति । **श्रीविष्णुधर्मे** च *सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । न हि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि ॥ वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैरिति । **श्रीवैष्णवे** च पुराणे कालियदाराः *न समर्थास्सुराः

स्तोतुं यमनन्तमजं विभुम् । स्वरूपवर्णनं तस्य कथं योषित्करिष्यति ॥ स्त्रियोऽनुकम्प्यास्साधूनां मूढा दीनाश्च जन्तवः । यतस्ततोऽस्य दीनस्य क्षम्यतां वदतां वरेति । **वाराहे** च **रुद्रगीतासु** सप्तमाध्याये *चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः । स ते गुणानामयुतैकमंशं वदेन्न वा देववर ! प्रसीदेति । नन्वस्य विषयस्य यथावद्वक्तुमशक्यत्वेऽपि चतुर्मुखादीनां च तव च तारतम्यमस्तीत्यत्र स्वाभिप्रेतमर्थमर्थान्तरन्यासेन द्रढयति **महार्णवान्तरि**ति । अत्यगाधेऽस्मिन् कुलाचलस्याप्यमग्नांशो न स्यादिति भावः । **अणुकुलाचलयो**श्च मिथः परिमाणगुरुत्ववैषम्येऽपि मज्जनेनादृश्यत्वमविशिष्टमित्यभिप्रायेण **को मज्जतोर्विशेष** इत्युक्तम् ॥ ८ ॥

**किं चैष शक्त्यतिशयेन न तेऽनुकम्प्यः स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।**
**तत्र श्रमस्तु सुलभो मम मन्दबुद्धेरित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥** ९

न केवलमविशेषः स्तोतृषु, दैन्यातिशयेन शीघ्रं त्वदनुकम्पाफललाभान्ममैवाधिकारः प्रकृष्यत इत्यभिप्रायेणाह— **किं चेति** ॥ अत्राधिकारसद्भावेन सह तत्प्रकर्षस्समुच्चीयते । एष स्तोतेति भगवतस्स्तुतिवैमुख्यनिवृत्तिसाम्यात् प्रभूताल्पशक्त्योरेकराशित्वेनोपादानम् । स्तोतुस्सामर्थ्यातिशयः प्रायस्त्वत्कृपामान्द्यकारणमिति सूचयन्नाह—**शक्त्यतिशयेन न तेऽनुकम्प्य** इति । ते सर्वविद्भिर्वैदैस्सूरिभिश्च नित्यं स्तूयमानतया स्तुत्यन्तरनिरपेक्षस्य दीनानुकम्पनस्वभावस्य यथाधिकारं रक्षणोपयुक्तयत्किंचिद्व्याजमात्रापेक्षिणश्चेति भावः । केन तर्ह्यनुकम्पनीय इति शङ्कायां शक्त्यतिशयवैपरीत्यस्यैवानुकम्पातिशयहेतुत्वरूपं विशेषं सूचयति—**अपि त्विति** । **परिश्रमेण**—परितः श्रमेण, अशक्त्या भक्त्या च स्तोतुं हातुं चानर्हतया सर्वप्रकारव्याकुलत्वेनेति भावः । **तत्र**—तथा सतीत्यर्थः ; स्तुताविति वा । मम तु श्रमस्सुलभ इत्यन्वयः । **श्रमस्तु सुलभः** न तु शक्त्यतिशयप्रसङ्गः इति वाऽभिप्रेतम् । **मन्दबुद्धेः**—अल्पज्ञत्वादित्यर्थः । इतिशब्दो हेत्वर्थः उद्यमप्रकारपरो वा । **अयमुद्यमः** *स्तोष्यामि *स्तौमीति श्लोकद्वयोक्तस्तोत्रोपक्रमः । **मम च**—ममैवेत्यर्थः । अविरुद्धोऽप्यत्र समुच्चयार्थो मन्दः । ममेति कथितपदावृत्तिर्न हिरण्यगर्भादेरित्यतिशयितविधेयतात्पर्यादलङ्कार एव । त्वत्कटाक्षात्खल्वहं तुष्टूषुदशां तत्राधिकारातिशयं च प्राप्तः, एवमनुग्रहातिशयव्यञ्जकेनावलोकनदानेन भूयोऽपि मां पालय ; येन स्तुतिरियमविघ्ना निष्पद्येतेत्यभिप्रायेणाह—**अब्जनेत्रेति** ॥ ९ ॥

**नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो ! भवितुमेव कुतः प्रवृत्तिः ।**
**एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥** १०

अथैवं यथामनोरथं तव सर्वसमीहितसिद्धिर्भवत्विति कटाक्षयन्तं भगवन्तं प्रति प्राचीनप्रभूतोपकारप्रख्यापनेनाद्यतनानुग्रहस्यानाश्चर्यतामाह—**नावेक्षस** इति ॥ अथवा अल्पशक्तेः स्वस्य स्तुत्यौचित्यातिशयवचनेन व्यञ्जितं भगवत आश्रितवात्सल्यं केनचित् कैमुत्येन स्थापयन्नेव सर्वशरण्यत्वोपयोगितया प्रपञ्चयिष्यमाणं सर्वस्मात् परत्वं कारणलक्षणेनोपक्षिपन् तद्वत् काष्ठाप्राप्तं सौलभ्यं चाह । अयमेव शारीरकशास्त्रारम्भघटितस्तोत्रारम्भः ॥

कारणत्वं नियन्तृत्वं सुहृत्त्वं स्वामिता हरेः । वात्सल्यमिति पञ्चैते कण्ठोक्ता इह सद्गुणाः ॥

अवेक्षणमिह *तदैक्षत *सोऽकामयतेत्यादिसूक्तः, *ईक्षतेर्नाशब्दम् *गौणश्चेन्नाऽऽत्मशब्दादित्यादिसूत्रस्थापि-तस्सानुग्रहसङ्कल्पः । **ततः**—त्वदवेक्षणरूपहेत्वभावादित्यर्थः । **भुवनानी**ति कृत्स्नकार्यपरम् । **अमूनी**ति तत्तत्प्रमाण-

सिद्धभोक्तृभोग्यरूपकार्यजातानामन्याशक्यकरणवैचित्र्याभिप्रायम्; *यतो वा इमानि भूतानि, *जन्माद्यस्य यत इति श्रुतिसूत्रयोरिदंशब्दवत्। **नालं**—न समर्थानि, कारणाभावे कथं कार्यं स्यादिति भावः। **प्रभो**—स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेद!। **भवितुम्**—उत्पत्तुं सत्तायोगितया स्थातुं च। एवकारो भवनस्य परसङ्कल्पनैरपेक्ष्यशङ्कां वारयन् प्रवृत्त्यनर्हत्वे कैमुत्यमुद्घाटयति। एवमलब्धसत्ताकानां सत्तापूर्विका प्रवृत्तिश्च त्वदीक्षणमन्तरेण न स्यादित्याह—**कुतः प्रवृत्तिरि**ति। श्रूयते हि, *को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यादिति। अन्तर्यामिब्राह्मणादिकं सर्वमिहानुसन्धेयम्। उक्तं च स्वयमेव **मोक्षधर्मे** *यत्किंचिद्वर्तते लोके सर्वं तन्मद्विचेष्टितम्। अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहमिति। अत्र च परमकारणविषये विकल्पसमुच्चयान्यतरबाधाद्यसंभवात् गतिसामान्यन्यायेन कारणवाक्यानि सर्वाणि त्वय्येककण्ठानीति व्यतिरेकोक्त्या सूच्यते। कारणत्वोक्त्यैव *यो ब्रह्माणमित्यादिश्वेताश्वतरमन्त्रोक्तं शरण्यत्वमप्याकृष्टम्। **एवं**—भोगमोक्षार्थप्रवृत्त्यौपयिककरणकलेबरदानादिप्रकारेणेत्यर्थः। *स एकाकी न रमेतेत्यनेनाभिप्रेतं विश्वसृष्ट्युपयुक्तं दयमानमनस्त्वं सूचयति—**निसर्गसुहृदी**ति। सर्वसामान्यतः पूर्वोपकारप्रत्युपकारनिरपेक्षहितैषिणीत्यर्थः। सुहृत्त्वस्य नैसर्गिकत्वं *स्वाभाविकी ज्ञानबलक्रिया चेत्यत्र रक्षणक्रियाया अपि स्वाभाविकत्वोक्त्याऽर्थसिद्धम्। अत्र प्रभुशब्देन सुहृच्छब्देन च *सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृदिति श्वेताश्वतरवाक्यं सूचितम्। **त्वयि**—न हि त्वदन्यः कश्चिदेवं प्रमाणसिद्ध इति भावः। सर्वजन्तोरित्येतत् काकाक्षिन्यायात्परत्राप्यन्वेति। *पतिं विश्वस्यात्मेश्वरम् *स कारणं करणाधिपाधिपः, *प्रधानक्षेत्रज्ञपतिर्गुणेशः, *पतिं पतीनां परमं परस्तात् *एष भूतपतिरेष भूतपाल इत्यादिषु प्रसिद्धं हि सर्वस्वामित्वम्। एतच्च सर्वेषां स्वार्थोपकारकत्वे सर्वस्य च तदिष्टविनियोगार्हत्वे हेतुः। **न चित्रं**—नाद्भुतम्। **इदं** स्तुतिवैगुण्यानादरेण स्तोतरि मयि प्रीतिरूपमित्यर्थः। स एष वात्सल्याख्यो गुणः सर्वाविशेषेण **कठवल्ल्यामुक्तः**—*अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सत इति। उपबृंहितं च *रिपूणामपि वत्सल इति। **इदमाश्रितवत्सलत्वं न चित्रम्**—संप्रतीह स्तोत्रे प्रेरयतस्तव मन्मुखोदितस्तुतिश्रवणेन जगद्व्यापारविहारस्सफलस्संपद्यत इति भावः। अत्र स्तुतिवैमुख्यनिवर्तनादिलब्धविजयसन्तोषभगवदुक्तिप्रत्युक्तिरूपताऽप्याचार्योक्ता। तथा हि वेत्थ यथा मम त्वयि वात्सल्यं यथा च मुग्धभाषिते पित्रोरिव मे भवन्मुखागतस्तुतिवचनश्रवणकौतूहलमिति वदन्तं प्रत्याह—**नावेक्षस** इति॥ १०॥

**स्वाभाविकानवधिकातिशयेशितृत्वं नारायण! त्वयि न मृष्यति वैदिकः कः।**
**ब्रह्मा शिवश्शतमखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते॥ ११॥**

ननु *हिरण्यगर्भस्समवर्तताग्रे *न सन्न चासच्छिव एव केवलः *इन्द्रो मायाभिः पुरुरूप ईयते इति ब्रह्मादीनाम्, मुक्तस्य च *यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठतीति सर्वजगत्कारणत्वं प्रतीयते। तदेतत् कथं परब्रह्मलक्षणम्? कथंच तद्योगात्परमपुरुषस्य सर्वस्वामित्वादि? तत्राह—**स्वाभाविके**ति॥ स्वाभाविकत्वमिहानन्याधीनत्वम्, तेन कर्मोपाधिकदुःखमिश्रानित्यचतुर्मुखाद्यैश्वर्यव्यावृत्तिः। अनवधिकातिशयत्वमुत्कृष्टावधिरहितोत्कर्षवत्त्वम्, *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यत्र परत्वस्वाभाविकत्वे शक्त्यादिषु सर्वेष्वन्विते इति भावः। एताभ्यामेव परिमितं पराधीनं च मुक्तनित्यैश्वर्यमपि व्यवच्छिद्यते। ईदृशमीशितृत्वं हि तवैव। विश्वपतित्वात्मेश्वरत्वादिश्रुतेः, *प्रशासितारं सर्वेषाम् *शास्ता विष्णुरशेषस्येत्यादिस्मृतिशतैश्च। स्वयं च गीतं *मत्तः परतरं नान्यदिति।

*एष धाता विधाता च सर्वेषां प्राणिनां प्रभुः । परं हि पुण्डरीकाक्षान्नभूतं न भविष्यतीत्यादि च द्रष्टव्यम् । अत्र नारायणेत्यनेन कारणवाक्येष्वन्यार्थशङ्कागोचराणां सदसदव्याकृतब्रह्मात्महिरण्यगर्भशिवाकाशप्राणादिशब्दानां कयाचिद्वृत्त्याऽनन्यपराबाधितार्थसात्त्विकोपबृंहणानुगुणमहोपनिषन्मैत्रायणीयसुबालोपनिषदादिपठितनारायणशब्दोदितमहापुरुषविषयत्वं केवलतत्त्वनिर्णयप्रवृत्तनारायणानुवाकतात्पर्येण भगवत एव सर्वपरविद्यावेद्यत्वं तत्रत्यतत्तच्छब्दवाच्यत्वं च प्रकाश्यते । अस्य च नाम्नो निरुक्तिभेदैश्शारीरकाध्यायचतुष्टयविवक्षितकारणत्वनिर्बाधत्वोपायत्वप्राप्यत्वानि भाव्यानि । एवमाततमानेकस्मृतिवचनानि चानेन प्रत्यभिज्ञाप्यन्ते । तत्र तावन्मनुः *आसीदिदं तमोभूतमित्यारभ्य, *आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् । तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यत इति । **बृहस्पतिः**—*नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् । अण्डाद्ब्रह्मा समभवत्तेन सृष्टमिदं जगदिति । **दक्षः**—*ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । ब्रह्मलोकमवाप्नोति न चेहाजायते पुनरिति । **व्यासः**—*आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदेति । *नमो भगवते तस्मै व्यासायामिततेजसे । यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमामिति च **वैशम्पायन**वाक्यम् । ईदृशानि वचनशतानि विस्तरभयान्न लिख्यन्ते ।

**त्वयि** *सर्वे वेदा यत्पदमामनन्ति, *सर्वे वेदा यत्रैकं भवन्ति, *नतास्स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती, *वेदैश्च सर्वैरहमेव वेद्यः, *वेदे रामायणे चैव भारते भरतर्षभ! । आदौ मध्ये तथा चान्ते विष्णुस्सर्वत्र गीयते, *नारायणपरा वेदा इत्यादिभिस्सर्ववेदवेद्यतया प्रसिद्धे पूर्वोक्तसर्वकारणत्वसर्वस्वामित्वादिलक्षणे । **न मृष्यति**—न सहते । **वैदिकः**—वेदप्रमाणक इत्यर्थः । *वेदैः पश्यन्ति ब्राह्मणाः, *पितृदेवमनुष्याणां वेदश्चक्षुस्सनातनम् । श्रुतिस्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते इति हि स्मर्यते । वैदिकशब्देन *सर्वे वेदास्सपितरो ब्रह्माद्याश्चाण्डमध्यगाः । विष्णोस्सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिरिति **वाराह**वचनम्, *वेदवेद्यो हि भगवान् वासुदेवस्सनातनः । गीयते स परो वेदैर्यो वेदैनं स वेदविदिति **कौर्म**वचनं च सूच्यते । अत्र चोत्तरेषु वाक्येषु च किंशब्दः क्षेपार्थः । वैदिकः को न मृष्यतीत्यनेन भगवत्पारम्यमसहमानस्य वेदबाह्यतया पापिष्ठत्वं व्यज्यते । यथोक्तं **प्राजापत्यस्मृतौ**—*नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् । योऽन्यमर्चयते देवं परबुद्ध्या स पापभागिति । **महाभारते** तीर्थरक्षकपिशाचवाक्यं—*ये द्विषन्ति महात्मानं न स्मरन्ति च केशवम् । न तेषां पुण्यतीर्थेषु गतिस्संसर्गिणामपीति । **सप्तर्षिसंवादे** *विष्णुं ब्रह्मण्यदेवेशं देवदेवं जनार्दनम् । त्रैलोक्यस्थितिसंहारसृष्टिहेतुं निरञ्जनम् ॥ आधातारं विधातारं सन्धातारं जगद्गुरुम् । विहाय स भजत्यन्यं बिसस्तैन्यं करोति य इति । **भगवद्गीता**स्वासुरान् प्रक्रम्य *अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः । मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्विति । **ब्रह्माण्डकौर्मयोश्च** *येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथात्ते वै पाषण्डिनः स्मृता इति । **श्रीभागवते** भगवन्तं प्रस्तुत्य *अस्मादन्यं परत्वेन चेतयानो ह्यचेतनः । स पाषण्डीति विज्ञेयः सर्वकर्मबहिष्कृत इति, *यस्तु नारायणं देवं समत्वेनाभिमन्यते । स तु तेनावमानेन नरकान्नातिवर्तत इति च । *ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् । ते वै पाषण्डिनो ज्ञेया नरकार्हा नराधमाः, *यः पुत्रः पितरं द्वेष्टि तं विन्द्यादन्यरेतसम् । यो विष्णुं सन्ततं द्वेष्टि तं विन्द्यादन्यरेतसम्, *विष्णुभक्तिविहीनो यस्सर्वशास्त्रार्थवेद्यपि । ब्राह्मण्यं तस्य न भवेत्तस्योत्पत्तिर्निरूप्यताम्, *चतुर्वेद्यपि यो विप्रो वासुदेवं न विन्दति । वेदभार-

भराक्रान्तस्स वै ब्राह्मणगर्दभ इत्यादीनि द्रष्टव्यानि। अस्मिन्**नारायणानुवाके** * विश्वमेवेदं पुरुष इति पूर्वोक्तसमानन्यायतया * स ब्रह्मा स शिवस्सेन्द्र इत्यादिसामानाधिकरण्येन ब्रह्मादीनां विभूतित्वश्रवणात् त्रिमूर्त्यैक्यसाम्योत्तीर्णव्यक्त्यन्तरपक्षाणां प्रतिक्षेपस्सिद्ध इत्यभिप्रायेणाह—**ब्रह्मा शिव** इति। अनीश्वरतया सर्वसम्प्रतिपन्नेन्द्रादिसमभिव्याहारादबाधाच्च ब्रह्मशिवयोरनीश्वरत्वं सूच्यते। शतमखशब्दः कर्मवश्यत्वप्रसिद्धिख्यापनार्थः। अत्र चानुवाके तत्तत्कारणोपासनपरवाक्यपठिताश्शिवशम्भ्वादिशब्दाः नारायणविषया इति ज्ञापयितुं * नारायणपरं ब्रह्मेत्यादिभिस्तत्तदनुवादेन नारायणत्वविधानभूयस्त्वं सूचितम्। सूत्रितं च * लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपीति। * हिरण्यगर्भस्समवर्तताग्र इति वाक्यं तु * अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टाविति श्रुत्यैवानुवाकान्तरसंयोजनात् पुरुषसूक्तैकार्थोत्तरानुवाकप्रतिपाद्यमहापुरुषविषयम्। अत एव ऐन्द्रीन्यायादत्र हिरण्यगर्भशब्दः कयाचिदवयवशक्त्या भगवति वर्तते। * शिव एव केवल इत्यत्र शिवशब्दोऽपि * यदा तमस्तन्न दिवा न रात्रिरित्यनुवादान्वयात् सुबालोपनिषदुपदिष्टतमोमृत्युशब्दवाच्यप्रकृत्यधिष्ठातृभूतनारायणविषयः, शुद्धिमाङ्गल्यादावपि रूढश्चासौ, प्रयुक्तश्च भगवति * शाश्वतं शिवमच्युतमिति। * एक एव रुद्र इत्यादेस्तु प्राकरणिकहविरुद्देश्यत्वाकारपरतया न पारम्योपपादकत्वम्। * इन्द्रो मायाभिरित्यत्रेन्द्रशब्दश्च * तमिन्द्रं सन्तम् इन्द्र इत्याचक्षते परोक्षेणेति ब्राह्मणोक्त्या सर्वदर्शिपरमात्मविषयः। प्रसिद्धेन्द्रपरत्वेऽपि नात्र सर्वकारणत्वकण्ठोक्तिः; नच तत्क्लृप्तिः, पुरुरूपत्वादेरन्यथाऽप्युपपत्तेः। * न किरिन्द्र! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्नित्यत्र तु प्राकरणिककर्मविशेषौपयिकप्रशंसापरत्वाद्धस्त्वादिषु त्वदुत्तरो नास्तीति विवक्षितम्। स्वराट्छब्द इह * स स्वराड्भवतीत्याम्नातमुक्तविषयः; स च स्वातन्त्र्यवाचकोऽप्यत्राकर्मवश्यत्वपरः, ईश्वरशरीरभूतानामात्मनां तत्पारतन्त्र्यस्य यावत्स्वरूपभावित्वात्, परतन्त्रस्यापि सत्यसङ्कल्पत्वमिच्छाविफलत्वाभावादुपपद्यते। तेन * सङ्कल्पादेव तच्छ्रुतेः, * अत एव चानन्याधिपतिरिति सूत्रद्वयमप्यविरुद्धम्। मुक्तस्यैश्वर्यं * जगद्व्यापारवर्जमिति शारीरकान्ते स्थापितम्। परमत्वमिह ब्रह्माद्यपेक्षया; तच्चाकर्मवश्यस्य ज्ञानसङ्कोचादिरूपक्षरणविरहादित्यक्षरशब्देन दर्शितम्। * ब्रह्म वेद ब्रह्मैव भवतीत्यादिकमपि * परमं साम्यमुपैति, * मम साधर्म्यमागता इत्यादिश्रुतिस्मृत्यनुसारात् * वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभिजयतीत्यादिवत्तत्साम्याभिप्रायमेव। तस्य च सङ्कल्पात्स्वाभिमतसृष्टिः परेच्छानुगुण्येन परिमितविषया। सर्वलोकानुसञ्चरणश्रुतिश्च न जगद्व्यापारार्था। **इति**शब्द इह * स ब्रह्मा स शिव इत्यादिवाक्योपात्तप्रकारसूचनार्थः। **एते**—प्रजापतिपशुपतिसुरपतिप्रसिद्धिमन्तः। ततोऽप्यधिको मुक्तश्च। **अपि**शब्दस्तेषां तत्तत्प्रमाणसिद्धमहत्त्वे सत्यपीति द्योतयन् ततोऽर्वाचीनेषु कैमुत्यं व्यनक्ति। **यस्य ते**—* तं दुर्दर्शं गूढमनुप्रविष्टं, * यत्तदद्रेश्यमग्राह्यमित्यादिष्वदृश्यत्वादिगुणकतया प्रसिद्धमपि स्वात्मानं धनञ्जयधृतराष्ट्रादेरिव कृपया मे प्रकाशयत इति भावः। महिम्नोऽर्णवत्वरूपणमक्षयत्वापारत्वादिसूचनार्थम्। **महिमार्णवविप्रुषः**—अर्णवस्थानीयत्वन्महिमापेक्षया पृषतस्थानीयमहिमान इत्यर्थः; यद्वा अनन्तविभूतेस्तव विभूतिरूपमहिमसमुद्रबिन्दव इति। तदेतदुक्तमद्वितीयश्रुतिव्याख्यानमुखेन **संवित्सिद्धौ**—* यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले। इति तत्तुल्यनृपतिनिवारणपरं वचः॥ न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारणम्। तथा सुरासुरनरब्रह्माण्डायुतकोटयः॥ क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः। ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः। विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुष इति। ब्रह्मादीनां च सृष्ट्याद्युपयुक्तविभूतित्वं वक्ष्यति। तदिह * स ब्रह्मेत्यादिसामानाधिकरण्यमपि न स्वरूपैक्यादिप्रयुक्तम्, किंतु शरीरशरीरिभावनिबन्धनमिति सूचितं भवति। किं च * अग्निर्वै

देवानामवमो विष्णुः परम इति होतारोऽधीयते । * अग्निरवमो देवतानां विष्णुः परम इत्यध्वर्यवः । तथा * तद्ब्रह्म स आत्मा अङ्गान्यन्या देवता इति च । एतच्चोपबृंहितं * श्रूयतां परमं दैवं दुर्विज्ञेयं मयाऽपि च । नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥ नारायणस्य चाङ्गानि सर्वदैवानि चाभवन् । अन्यानि सर्वदैवानि तस्याङ्गानि महात्मन इति । अतश्च ब्रह्मादीनां भगवद्विभूतिसागरशीकरत्वं सिद्धमिति ॥ ११ ॥

**कश्श्रीः श्रियः परमसत्त्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः ।**
**कस्यायुतायुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥ १२**

अथ स्यात्—* हिरण्यगर्भस्समवर्ततेत्यादेः * अद्भ्यस्संभूत इत्यादिनैकार्थ्येऽपि तत्रैव चतुर्मुखासाधारणप्रजापतिशब्ददर्शनात्पुरुषशब्दस्य तु साधारण्येन चतुर्मुखेऽपि संभवात् * अम्भस्यपार इत्यत्रापि * प्रजापतिश्चरति गर्भे अन्तः, * स नो बन्धुर्जनिता स विधाता, * सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति प्रजापत्यादिशब्ददर्शनात्त्रितयमप्येतच्चतुर्मुखविषयमिति । अत्र तावत् * न ब्रह्मा नेशान इत्यादिव्यक्त्यन्तरनिषेधसहितविशेषश्रुत्या बाधप्रदर्शनान्न वक्तव्यशेषमस्ति । अथापि ब्रूमः—* अम्भस्यपार इत्यत्र तावत् * यमन्तस्समुद्रे कवयो वयन्तीति समुद्रशायित्वं, * यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तादिति तमसः पारवर्तित्वं, * सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीति विद्युद्वर्णपुरुषत्वं, * स आपः प्रदुघे उभे इमे इत्यादिभिर्विचित्रजगत्कारणत्वं, * य एनं विदुरमृतास्ते भवन्तीति मोक्षप्राप्तिहेतुत्वं, * विश्वतश्चक्षुरुत विश्वतोमुख इत्यादिना सहस्रशीर्षत्वादिकं च प्रत्यभिज्ञायमानमस्यानुवाकस्य पुरुषसूक्तोदितमहापुरुषगोचरतां गमयति । प्रसिद्धप्रजापतेः परमपुरुषकार्यत्वतन्नियाम्यत्वकर्मवश्यत्वादिकं च प्रसिद्धम् । अतोऽत्र प्रजापत्यादिशब्दाः परमकारणभूतं नारायणमेव प्रतिपादयन्ति । एवम् * अद्भ्यस्संभूत इत्यनुवाकस्यापि पुरुषसूक्तप्रकरणाविच्छेदात् * वेदाहमेतं पुरुषं महान्तमित्यादिवाक्यार्थप्रत्यभिज्ञानाच्च महापुरुषविषयत्वं सुगमम् । तमिममर्थमनन्यथासिद्धेन लक्ष्मीपतित्वलिङ्गेन द्रढयति—**कश्श्रीः श्रिय** इति ॥ अत्र त्वदन्य इति वक्ष्यमाणमनुसन्धेयम् । *श्रियः श्रीश्च भवेदग्र्या कीर्त्याः कीर्तिः क्षमाक्षमेत्युक्तमिहाभिप्रेतम् । श्रीरेव ह्यन्येषामतिशयं विधत्ते, तस्या अपि * भर्ता नाम परं नार्या भूषणं भूषणादपीतिन्यायेनातिशयहेतुरयमिति भावः । **नारायणमुनि**भिस्त्वेवमिह व्याख्यातम्—*स्वेतरसमस्तैः स्वरूपस्थितिप्रवृत्त्यर्थं या श्रीयते सा श्रीः, तस्या अपि तथा श्रयणीय इति । श्रीशब्दनिरुक्तयश्च—* शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥ श्रयन्तीं श्रीयमाणां च शृण्वतीं शृणतीमपीत्यादिषु द्रष्टव्याः । श्रिय इत्यनेन * ह्रीश्च ते लक्ष्मीश्च पत्न्यावित्याम्नातलक्ष्मीशब्दपर्यायोपादानम् । अत्र ह्रीरिति भूमिर्विवक्षिता ; * श्रीभूमिसहितं हरिमित्यादिप्रसिद्धेः । **वाजसनेयके** तु ह्रीशब्दस्थाने श्रीशब्दपठनेऽपि यथोचितमर्थो ग्राह्यः ; तदिह पुरुषसूक्तप्रकरणोदितश्रियःपतित्वलिङ्गसहकृतमहापुरुषप्रत्यभिज्ञानबाधितरूढिः प्रजापतिशब्दः * पतिं विश्वस्येत्युक्तपुष्कलावयवार्थं नारायणमेवाभिधत्त इति भावः । प्रयुक्तश्चासौ तद्विषयतया **महाभारते**—* राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीमस्स पिता स प्रजापतिरिति । * सप्तदश प्राजापत्यान् पशूनित्यादौ च । * श्यामा एकरूपा भवन्ति एवमिव हि प्रजापतिरिति प्रजापतेः श्यामत्वैकरूपत्वोक्त्या प्रजापतिशब्दस्य विष्णुविषयत्वं गम्यते । * आश्रावयेति चतुरक्षरमित्यारभ्य * एष वै सप्तदशः प्रजापतिरित्येतस्य च विष्णुविषयत्वं, * चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदत्विति **महाभारतवचनेन** व्यञ्जितम् । ननु पुरुषसूक्तस्य कथं भगवत्परत्वम् ?

**भगवदुक्तात्मभेदः स्वाभाविक इति श्रुतिरप्याह—*नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् (श्वे. ६. १३; क. ५. १३) इति । नित्यानां बहूनां चेतनानां य एको नित्यश्चेतनः, [स] कामान् विदधातीत्यर्थः । [अज्ञानकृतभेददृष्टिवादे तु] परमपुरुषस्य परमार्थदृष्टेर्निर्विशेषकूटस्थनित्यचैतन्यात्मयाथात्म्य-साक्षात्कारान्निवृत्ताज्ञानतत्कार्यतया अज्ञानकृतभेददर्शनं तन्मूलोपदेशादिव्यवहाराश्च न संगच्छन्ते ।**

**ता.।।** अथ कुमतिसौचिकविनिर्मितानामामूलचूडमघटितवि[सं]घटितजरत्कर्पटशकलकन्थासगन्धानां प्रबन्धानां दोषान् स्थालीपुलाकन्यायेन निदर्शयन्, प्रथमं शास्त्रोपक्रमविरोधं शास्त्रप्रवृत्त्यनुपपत्तिं च वदति—**एवमित्यादिना;** एवं—तत्त्वोपदेशप्रवृत्तशास्त्रारम्भोक्तिप्रकारेणेत्यर्थः । **भगवतः सर्वेश्वरादिति** । उभयलिङ्गात् सर्वनियन्तुः अहमिति निर्दिष्टा-दित्यर्थः । यदीश्वराज्जीवानां भेदः पारमार्थिको न स्यात्, उभयलिङ्गत्वदुःखित्वादिस्वभावसङ्करः स्यात्; यदि चात्मनां मिथोभेदः सत्यो न स्यात्, बद्धमुक्तशिष्याचार्यादिव्यवस्थानुपपत्तिः स्यादिति भावः । **भगवतैव**—न तु रथ्यापुरुषकल्पेन केनचित् । यद्वा *त्वमेव त्वां वेत्थ योऽसि सोऽसि (यजु. का. १. ६) *सो अङ्ग वेद यदि वा न वेद (ऋ. ८. ७. ११. ११) इत्युक्तेन भगवता स्वेनैव स्वस्य स्वशरीरभूतजीवानां च तत्त्वमुक्तमिति प्रतीयत इत्यभिप्रायः । **अज्ञान-मोहितमिति**—न हि स्वयं बंभ्रम्यमाणस्यातेनापि भ्रान्तिरेवोत्पादनीयेति भावः । बुद्धाद्यवतारेणासुरादिभ्य इवायमुप-देशः किं न स्यादित्यत्रोक्तं—**तन्निवृत्तय** इति । मोहनिवृत्त्यर्था गीतोपनिषदिति भवद्भिरपि स्वीकृत्य व्याख्यानादि च कृतमिति भावः । देहभेदाभिप्रायेण बहुवचनम्, नात्मभेदाभिप्रायेणेति शंकरोक्तं दूषयति—**पारमार्थिकेति** । न ह्यसौ *न त्वेवाहमित्यादिग्रन्थो भ्रान्तिनिवृत्त्यर्थो मन्त्रपाठः, येन भेदनिर्देशस्यान्यपरतां मन्येमहि; किं त्वसौ तत्त्वार्थोपदेशरूप इति भावः । **[अहमित्यादि—]अहम्** इति प्रत्यक्त्वेन, **त्वम्** इति स्वाभिमुखचेतनान्तरत्वेन, **इमे** इति स्वपराङ्मुखा-नेकचेतनत्वेन, **सर्वे** इति एकोपाधिसंगृहीतानेकव्यक्तित्वेन, **वयम्** इति स्वेन सहात्मतयैकवर्गीकृतानन्तव्यक्तित्वेन इति भावः । **इति व्यपदेशादिति**—न ह्यत्र नाहमिति किंचिदस्ति न च त्वमिति नाप्यन्य इति प्रत्यादेशः कृत इति भावः । भास्करमते भेदस्य सत्योपाधिप्रयुक्तत्वात् भेदनिर्देश उपपद्यत इति शङ्कायां तत्रापि सामान्यत उक्तं दूषण-मपरिहार्यमित्याह—**औपाधिकेति** । हिशब्द उपाधिभेदोपहितस्य परोक्तघटाकाशाद्युदाहरणेष्वपि भेदांशातात्त्विकत्वा-भ्युपगमपरः । उपाधिसत्यत्वेऽपि यथैकस्यैव मुखचन्द्रादेर्मणिकृपाणसरित्समुद्रादिभिः सत्यैरप्युपाधिभिर्भेदोऽपारमार्थिकः, यथा चैकस्यैवाकाशादेर्घटमणिकादिसत्योपाधिभिरपि संयोगभेदातिरिक्तो नोपाध्यधीनो भेदः, एवमन्तःकरणादिभिः सत्यैरप्युपाधिभिर्निरवयवत्वेन छेदनभेदनाद्ययोग्यस्य सर्वत्र परिपूर्णस्य ब्रह्मणो भेदोऽपारमार्थिक इत्यभ्युपगन्तव्यम् । ततश्च तत्त्वोपदेशसमये तद्विपरीतोपदेशो हितोपदेशिनो न घटत इति भावः । द्वयोरपि पक्षयोः श्रुतिविरोधोऽपि दूषणम् । स्वपक्षे च श्रुत्यैकार्थ्यान्न बुद्धागमादिवन्मोहनार्थत्वशङ्केत्यभिप्रायेणाह—**भगवदिति** । यद्वा भास्करपक्षदूषणायैव श्रुति-रुपात्ता; ततश्च कैमुत्येन शंकरपक्षोऽपि दूषितः । **अपिशब्दः** प्रमाणद्वयसमुच्चये । **भगवदुक्तात्मभेद** इत्यनेन श्रौतवदेव प्रमाणान्तरनैरपेक्ष्यं सूच्यते । श्रुतिरपि नित्या तदाज्ञारूपतयैव हि प्रमाणम् । *नित्यो नित्यानाम् (श्वे. ६. १३) इत्यत्र *पवित्राणां पवित्रम् (वि. स.) इत्यादिवद्योजनया जीवानित्यत्वपर्यवसितमर्थान्तरभ्रमं निरस्यन्, नित्यत्वबहुत्वचेतनत्वसामानाधिकरण्येन निरुपाधिकमेवात्मनां बहुत्वं चेतनत्वं चेति प्रदर्शयन्, तत एवात्मानित्यत्ववादिनां सौगतादीनाम्, अविद्यादिमूलभेदवादिनां शंकरादीनाम्, आगमापायिचैतन्यवादिनां वैशेषिकादीनां, चिच्छक्तिमात्र-नित्यत्ववादिनामन्येषामपि निरासमभिप्रयन्, प्रथमान्तपदचतुष्टयसामानाधिकरण्यबलादीश्वरैक्यं तदैक्यस्य हिरण्यगर्भ-

रुद्रेन्द्रादिवत्कालादिभेदाभेद्यत्वेन प्रवाहेश्वरपक्षप्रतिक्षेपं श्रुत्यन्तरादिप्रसिद्धनित्यचैतन्यप्रसरादिकं सूचयन्, '*यदाग्नेयः (य. अ. ३. ९. १७) इत्यादिवदनुवादलिङ्गसद्भावेऽप्यप्राप्तत्वबलेन विशिष्टविधित्वं च व्यञ्जयन्, सर्वदा सर्वत्र सर्वेषां चेतनानामेक एवेश्वरस्तत्तत्कर्मसमाराधितस्तत्तदनुरूपाण्यपेक्षितानि करोतीति श्रुत्यर्थमाह—**नित्यानामिति**। पुनः सिंहावलोकितेन शंकरमतस्योपदेशानुपपत्तिरूपं शास्त्रारम्भमूलघातमाह—**अज्ञानेति**। किमयं भगवान् स्वेन ज्ञातमर्थमुपदिशति, अज्ञातं वा? ज्ञातमपि साक्षात्कृतम्, श्रुतमात्रं वा? उभयत्रापि तदज्ञानं निवृत्तम्, अनिवृत्तं वा? तन्निवृत्तावपि तत्कार्यभेदभ्रमो निवर्तते, न वा? इति विकल्पमभिप्रेत्य साक्षात्कारादज्ञानतत्कार्यनिवृत्तिपक्षे दूषणमाह—**परमपुरुषस्येति**। क्षेत्रज्ञस्य हि अपरमार्थदृष्टिः स्यादिति भावः। **निर्विशेषेत्यादि**—निर्विशेषत्वं सजातीयविजातीयस्वगतभेदराहित्यम्; कूटस्थत्वं मायानिष्ठत्वम्, साधारण्यम्, निर्विकारत्वं वा—स्वयमविक्रियमाणस्यापि कूटस्य यथा स्वसंसर्गिणामयःप्रभृतीनां विकारहेतुत्वं तद्वत्; तत एव **नित्यत्वं** कालानवच्छिन्नत्वम्। **याथात्म्यम्** उक्तप्रकारम्; अयथासाक्षात्कारोऽसदादीनामपि परैरभ्युपगत इति तद्व्युदासाय **याथात्म्यसाक्षात्कारोक्तिः**। अज्ञानम् अविद्या; तत्कार्यो भेदभ्रमः; आदिशब्देनानुष्ठापनादि गृह्यते। उपदेशादिव्यवहारो हि उपदेश्यार्थतद्वाचकाधिकारिशिष्याचार्यप्रयोजनभेदादिनानाविधभेददर्शनमूलः। भेददर्शनं चाज्ञानेनैव कृतमिति त्वन्मतम्। ततश्चाज्ञानतत्कार्यनिवृत्तौ कथं तत्कार्यपरम्परानुवृत्तिरिति व्याघातापसिद्धान्तशास्त्रानारम्भोपदेशाभावनिष्फलपरिश्रमत्वश्रुतिविरोधादिदोषशतमुन्मिषेदिति भावः॥

**भा॥ अथ परमपुरुषस्याधिगताद्वैतज्ञानस्य बाधितानुवृत्तिरूपमिदं भेदज्ञानं दग्धपटादिवन्न बन्धकमित्युच्यते—नैतदुपपद्यते; मरीचिकाजलज्ञानादिकं हि बाधितमनुवर्तमानं न जलाहरणादिप्रवृत्तिहेतुः। एवमत्राप्यद्वैतज्ञानेन बाधितं भेदज्ञानमनुवर्तमानमपि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशादिप्रवृत्तिहेतुर्भवति। न चेश्वरस्य पूर्वमज्ञस्य शास्त्राधिगततत्त्वज्ञानतया बाधितानुवृत्तिः शक्यते वक्तुम्; *यः सर्वज्ञः सर्ववित्, (मु. १.२.९) *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, (श्वे ६.७) *वेदाहं समतीतानि वर्तमानानि चार्जुन। भविष्याणि च भूतानि मां तु वेद न कश्चन॥ (गी. ७. २६) इति श्रुतिस्मृतिविरोधात्।**

**ता॥** अद्वैतज्ञानादज्ञाननिवृत्तावपि वासनादिवशाद्भेदभ्रमस्यानुवृत्तिं तस्य चाबन्धकत्वमाशङ्कते—**अथेति**। **दग्धपटादिवदिति**—यथा दग्धपटादेः पटादिप्रतिभासविषयत्वेऽपि न पटादिकार्यकरत्वम्, तद्वदत्र भेदभ्रमस्यानुवृत्तस्यापि न संसारहेतुत्वमिति भावः। **नैतदुपपद्यत** इति—दृष्टान्तमात्रमुक्तं न तूपपत्तिः, प्रत्युतानुपपत्तिश्च विद्यत इति भावः। अनुपपत्तिं सोदाहरणमाह—**मरीचिकेति**। एवमत्र प्रसङ्गः—विप्रतिपन्नं भेदज्ञानमद्वैतज्ञानबाधिततया मिथ्यार्थमिति निश्चितं चेत्, न स्वविषयानुरूपप्रवृत्तिहेतुः स्यात्; यथा बाधितानुवृत्तं मरीचिकाजलज्ञानम्—इति। एवं च बाधितानुवृत्तभेदज्ञानं दग्धपटादिवत् न स्वकार्यकरमिति बाधितानुवृत्तिफलाभावात् स्वेष्टव्याघात इति भावः। श्रुतमात्रपक्षेऽपि निर्विशेषविषयसाक्षात्कारश्रवणयोर्विषयानतिरेकेणाज्ञाननिवृत्तिरुपपन्नेति कृत्वा सर्वेश्वरे बाधितानुवृत्तिस्वरूपं दूषयति—**न चेति**। ईश्वरत्वादेव पूर्वमज्ञ इति वक्तुं न शक्यते, अनीश्वरत्वप्रसङ्गात्। ईश्वरोऽपि चेत् पूर्वमज्ञः, तस्य शास्त्राधिगमोऽपि न संभवति, तदधिकज्ञानवतोऽन्यस्य शास्त्रोपदेष्टुरभावात्। भावे वा स एवेश्वरोऽनीश्वरो वा सन् कुतश्चित् सिद्धज्ञान इत्यनवस्थादिदोषात्। न च प्रवाहेश्वरपारम्पर्यमस्ति, तस्य दूषितत्वात्। न चेश्वरः स्वकृतेन शास्त्रेण तत्त्वमवगच्छति, वेदानित्यत्वान्योन्याश्रयादिप्रसङ्गात्। न चानादीनेव वेदान् स्मृत्वा तैरर्थमधिजगाम; स्मृत्यादिहेतोः पूर्वोपलम्भस्याप्युपदेष्टृभावादि-

